॥ विनायकस्तुतिः ॥
देवीपुराणान्तर्गतम् सटीप

विष्णुरुवाच-
स्तोष्ये सुरारिदमनं दमनं रिपूणां
वैरिहाणं गजवक्त्रमुदन्तशोभम् ।
तं भाति कुन्दहिमशङ्खशशाङ्कदन्तं
ताम्राभकान्तिवपुषं रुचिरारुणाभम् ॥ १॥

तां भस्मव्यापितजगच्छशिसूर्यमार्गं var तं भाति अर्पित जग
गां गच्छतीव मेरुसुरारिहन्तुम् ।
तमहं नमामि भगवन् प्रमथेशजातं
तर्जन् सुरारिभयदं दनुदर्पहन्तुम् ॥ २॥

ताराभमौक्तिककृतं वनमालग्रीवं
वाराहवक्त्रदृढदंष्ट्र इवांशुशोभम् । var वक्षदृढ
भृङ्गोपगीतमदगण्डसुसेव्यमानं
तमहं नमामि वरदं वरदायकं तम् ॥ ३॥

तारारिणं प्रमथभ्रातृवरं सुरेशं var सुवेशं
शम्भोर्द्वितीय इव मूर्तिसुचारुवेशम् ।
नानाविचित्ररूपशोभितचारुहारं
जम्भकान्तकं च तमहं महाप्रमाणम् ॥ ४॥

नागेन्द्रभोगकृतशेखरमूर्द्धिमानं
लम्बन्तचारुचमरं रणकार्यवीरम् ।
स्तम्भन्तशत्रुवनकान्तमहान्तमन्तं
तं मातृयोगिगणमर्चितसुष्टमिष्टम् ॥ ५॥

टङ्कारहाररचनादितघण्टशब्दं
हुङ्कारकारवरनादघटाकलापम् ।
पङ्काङ्करेणुरजपङ्कजचारुकवर्यं
चामीकराखचितमरकतसंसेव्यमानम् ॥ ६॥

लम्बन्तकर्णपर्णशङ्खञ्च सुचारुचामरं
रक्तास्तनेत्रकर्णायतचारुतुङ्गम् ।
गम्भीरगर्जितमहारवमेघशब्दं var भेघशब्दं
दण्डाङ्कुशपरशुमेखलसूत्रधारम् ॥ ७॥

रराजते सकलपर्वतसानुकण्ठं
चण्डातिनूपुरध्वनिमुखं विश्रान्तम् ।
var विभ्रान्तं वितातन्तं
तस्मै नमामि सततं जगतो हिताय
विघ्नेश्वराय वरदाय वरप्रदाय ॥ ८॥

वामैकहस्तसततं कृतलड्डुकाय
सिद्धार्थकं सुरभिगन्धविलेपनाय ।
ब्रह्मेन्द्रचन्द्रवसुशङ्करसंस्तुताय
गङ्गाजलौघ इव दानमहाप्रदाय ॥ ९॥

इच्छार्थमीहितफलप्रदाय शिवाय
सम्पूजयस्व मम देवशुभं शुभाय ।
विघ्नं विनाशाय प्रभो सुरसिद्धशत्रुं
शक्रस्य व्याधितदिवस्य शुभं प्रयच्छ ॥ १०॥

स्तुत्वा तु शक्तितनयं प्रयतेन विष्णो
स्तुष्टः समीहितवरं ददते च तस्य ।
विष्णोस्तवार्थमिदं शैलवरं हरेण
सम्प्रेषितो रिपुहराय पुरन्दरस्य ॥ ११॥

मयोच्यतां वद भवान् किमहं करोमि
त्रैलोक्यनिर्जितरिपुं त्वमहं ददामि ।
स्तुत्वैवं तदा देवं विष्णुना प्रभविष्णुना
तुतुष्ट वरदीभूतो विघ्नस्य निधनाय च ॥ १२॥

इति श्रीदेवीपुराणे विनायकस्तवो नाम
त्रयोदशाधिकशततमोऽध्यायः ॥ ११३॥